मुखको देखे जो विपत्तिके ज्वरसे पैदा हुए लंबे २ श्वासोंको लेती हैं अर्थात् कुटुम्ब वढानेकी इच्छाही उक्त स्त्रियोंका मुख दिखाती है, नहीं तो गंगातटपरही सर्वानन्द है ॥ ११२ ॥

उद्यानेषु विचित्रभोजनविधिस्तीव्रातितीव्रं तपः।
कौपीनावरणं सुवस्त्रममितं भिक्षाटनं मण्डनम् ॥
आसन्नं मरणं च मङ्गलसमं यस्यां समुत्पद्यते ।
तां काशीं परिहृत्य हन्त विबुधैरन्यत्र किं स्थीयते

उद्यानेष्विति ॥ तां काशीं परिहृत्य परित्यज्य हंत इति खेदे । विबुधैः किं अन्यत्र स्थीयते । अपि तु न । यस्यां काश्यां उद्यानेषु विचित्रभोजनविधिः चान्यत्तीव्रातितीव्रं तपः चान्यत्सुवस्त्रं कौपीनावरणं मण्डनं चान्यद्यस्यां अमितं भिक्षाटनं यस्यां काश्यां मङ्गलसमं आसन्नं मरणं समुत्पद्यते तां काशीं मुक्त्वा अन्यत्र कथं स्थीयते ॥ ११३ ॥

उपवनोंमें नाना प्रकारके भोजन बनायके खाना और जहां कठिनसे कठिन तप और लंगोटी पहिननाही परम सुन्दर वस्त्र और भीख मांगनाही जहां भूषण है और मृत्यु आनाही जहां परम मङ्गल उत्पन्न होता है ऐसी काशीको छोड पण्डित लोग अन्यत्र क्यों वसते हैं ॥ ११३ ॥

नायं ते समयो रहस्यमधुना निद्राति नाथो यदि ।
स्थित्वा द्रक्ष्यति कुप्यति प्रभुरिति द्वारेषु येषां वचः ॥
चेतस्तानपहाय याहि भवनं देवस्य विश्वेशितु- ।
र्निर्दौवारिकनिर्दयोक्त्यपरुषं निःसीमशर्मप्रदम् ११४॥

नायमिति ॥ नायं ते समयः प्रतिप्रस्तावो नास्ति यदि प्रभुः स्वामी द्रक्ष्यति तर्हि कुप्यति अधुना रहस्यं मन्त्रालोचनं स्वामी करोति स्वामी निद्राति निमीलनं कुरुते । येषां धनोन्मदवतां द्वारेषु इति वचः अस्थिरे

चेतस्तान् प्रभूनपहाय विश्वेशितुः परमेश्वरस्य महेशस्य भवनं याहि । किंभूतं भवनं निर्दौवारिकनिर्दयोक्त्यपरुषं निर्गतो दौवारिको यस्मात् तत् निर्दौवारिकं प्रतीहाररहितं निर्दयोक्त्या कठोरोक्त्याऽपरुषाः यस्मिन् तन्निर्दयोक्त्यपरुषं निर्दौवारिकं च तत् निर्दयोक्त्यपरुषं च निर्दौवारिकनिर्दयोक्त्यपरुषं तत्पुनः किंभूतं निःसीमशर्मप्रदं सीमारहितं सर्वसौख्यं प्रददातीति अतिनिर्मलसौख्यदायकम् ॥ ११४ ॥

अभी समय नहीं, महाराज एकान्तमें बैठे कुछ विचार कर रहे हैं, अभी सोते हैं, डयोढीपरसे उठो, तुम्हें बैठे देखेंगे तो प्रभु हमपर क्रोध करेंगे ऐसे वचन जिनके द्वारपर द्वारपाल बोलते हैं उन्हें त्यागकर हे चित्त! विश्वेश्वरकी शरणमें जा । जिसके द्वार पर कोई रोकनेवाला नहीं, वहां निर्दय और कठोर वाक्य नहीं सुननेमें आते और जो अनन्त सुखदाई है ॥ ११४ ॥

**अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा ।**
**मणौ वा लोष्टे वा कुसुमशयने वा दृषदि वा ॥**
**तृणे वा स्त्रैणे वा मम समदृशो यांति दिवसाः ।**
**क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥११५॥**

इति भर्तृहरिकृतं वैराग्यशतकं संपूर्णम् ॥ ३ ॥

अहाविति ॥ अहौ सर्पे हारे मुक्ताफलहारे वा बलवति रिपौ शत्रौ सुहृदि हितकरे वा मणौ वा लोष्टे मृत्पिण्डे पाषाणे वा कुसुमशयने पुष्पशय्यायां दृषदि पाषाणे वा तृणे स्त्रैणे अपत्ये वा इत्यादिषु वा मम समा दृष्टिर्यस्य समदृशः दिवसाः कदा यांति गच्छंति । किंभूतस्य मम क्वचित् कुत्रचित् पुण्यारण्ये स्थित्वा शिवेति नामावलिं प्रलपतः उच्चैः आक्रोशेन वदतः ॥ ११६ ॥

इति श्रीभर्तृहरिकृतवैराग्यशतकव्याख्याने वैराग्यशतकं सम्पूर्णम् ॥ ३ ॥

सर्प वा हार, बलवान् शत्रु वा मित्र, मणि वा पाषाण, पुष्परचित शय्या वा पत्थरकी चट्टान, तृण वा स्त्रियोंके समूहमें

समदर्शी होकर पवित्र वनमें शिव शिव शिव जपते हमारे दिन कहीं व्यतीत होंगे हम यही चाहते हैं ॥ ११९ ॥

इति भर्तृहरिकृतवैराग्यशतकभाषाटीकायां वैराग्यशतकं सम्पूर्णम् ॥ ३ ॥

इति श्रीपरमयोगींद्रवृन्दमानसमिलन्मिलिंदसंदोहामंदानंदलाभमिंदिर-
रघुनंदनचरणारविंदमकरंदास्वादनकंदलितसारसारस्वतेन अखंड-
तपःप्रचंडमुनिप्रकांडमंडलेश्वरशांडिल्यमहामुनिगोत्रावतंसस्या-
वंचान्वयसुधापारावारपारिजातस्य धन्वंतर्यवतारांतरस्या-
युर्वेदप्रमुखनिखिलविद्यानवद्यगद्यपद्यनिर्माणचातुरीधुरी-
णसकलकविकुलसार्वभौमस्य कोरिडोपंडितवर्यस्य तनू-
जेन गंगाबिकागर्भरत्नाकरसुधाकरेण रामचन्द्र-
बुधेंद्रेण विरचितया सहृदयानंदिन्याख्यया
व्याख्यया सहितं शतकत्रयं समाप्तम् ।



पुस्तक मिलनेका ठिकाना-

गंगाविष्णु श्रीकृष्णदास "लक्ष्मीवेङ्कटेश्वर" स्टीम् प्रेस कल्याण-मुम्बई

खेमराज श्रीकृष्णदास "श्रीवेङ्कटेश्वर" स्टीम् प्रेस खेतवाडी-मुंबई.

